# अथ ज्ञानोदयविषयानुक्रमणिका ।

इति ज्ञानोदयविषयानुक्रमणिका समाप्ता ।

---

ॐ ज्ञानाय चत्वार आश्रमा नेतरथा ॥ तत्र प्रथमो ब्रह्मचर्याश्रमो निरूप्यते ॥
ब्रह्माध्ययनसंयुक्तो ब्रह्मचर्यरतः सदा ॥ सर्वं ब्रह्म च यो वेद ब्रह्मचारी स उच्यते १

अथ द्वितीयो गृहस्थाश्रमस्तत्रायं श्लोकः ॥

गार्हस्थ्यं गृहमध्यस्थः शरीरं गृहमुच्यते ॥ गुणाः कुर्वन्ति कर्माणि नाहं कर्तेति बुद्धिमान २

तृतीयो वानप्रस्थः ॥

किमुग्रैश्च तपोभिश्च यस्य ज्ञानमयं तपः ॥ हर्षामर्षविनिर्मुक्तो वानप्रस्थः स उच्यते ३

अथ चतुर्थः संन्यासस्तदाश्रमवर्णनम् ॥

हठन्यासो हि संन्यासो नैव काषायवाससा ॥
नाहं देहोऽहमात्मेति निश्चयो न्यासलक्षणम् ॥ ४ ॥
कर्मशास्त्रे कुतो ज्ञानं तर्के नैवास्ति निश्चयः ॥
सांख्ययोगौ भिदापन्नौ शाब्दिकः शब्दतत्परः ॥ ५ ॥
अन्ये पाखण्डिनः सर्वे ज्ञानवार्ता सुदुर्लभा ॥
एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते ॥ ६ ॥

प्रथमसे इस ज्ञानोदयनामक पुस्तकके सहायकोंके नाम लिखे जाते हैं ॥ प्रथम देहलीमें १००० एक हजार पुस्तक श्रीमान् काश्मीरी पण्डित धर्म-धुरन्धर श्री१०९जानकीनाथजी सफाई देहली निवासीकी सहायतासे छपीं ॥१॥ द्वितीयआवृत्ति १००० श्रीमान् काश्मीरी पण्डित सत्कार्यधुरन्धर श्री१०९का-शीनाथ जी दर सुप्रेण्टेण्डेण्ट जेल राजधानी अलवरकी सहायतासे छपीं ॥२॥ तृतीयआवृत्ति १००० श्रीमान् श्री १०९ काश्मीरी पण्डित दीवान ज्ञानोत्कर्ष धुरन्धर पण्डित दयाकृष्णजी कौल राजधानी अलवरकी सहायतासे छपीं ॥ ३ ॥ चतुर्थावृत्ति श्रीमन्नृपतिलकार्यकुल कमल दिवाकर श्री १०८ स्वधर्म भूषण श्रीमहाराणाजी उदयपुर मेदपाटेश्वरजीकी सहायतासे छपीं अपने सज्जन यन्त्रालयमें मुद्रित कराईं । पंचमावृत्ति श्रीमहाराणाजी के मन्त्री श्रीमान् श्री धर्मकार्यप्रदीप कोठारी श्री१०९बलवंत सिंहजी उदयपुर निवासीकी सहायतासे श्रीमान् सद्भक्तिप्रदीप श्री१०९बालमुकुन्द जोशी मनासा निवासीकी तथा श्रीमान् लौकिक पारमार्थिक कार्य निपुण श्रीमान् श्री१०९ गोवर्द्धन लालजी ओझा मांडल मेवाड निवासीकी विशेष सहायतासे २००० दो हजार प्रति "श्रीवेङ्कटेश्वर" स्टीम्-मुद्रणयन्त्रालयमें मुद्रित हुईं शम् ।

## विशेष सूचना ।

जो सज्जन विद्योत्साही विद्वान् राजा महाराजा सेठ साहूकार इस पुस्तकको छपाना चाहैं वह निःशंक छपा सकतेहैं और ब्रह्मचारी विद्यार्थियोंको विना मूल्य वितरित करें । शुभमस्तु सर्वजगताम् ॥

ॐ अथ प्रारिप्सितप्रकरणपरिसमाप्तिप्रतिबंधकीभूतप्रत्यूहपरिहाराद्यनेकफल-सम्पादकतया कृतमिष्टदेवतानमस्कारात्मकं मंगलं शिष्यशिक्षार्थमुपनिबध्नन्-प्रेक्षावदुपकाराय प्रतिजानीत इति शिवम् ॥

ॐ

# अथ मंगलाचरणम् ।

ॐ विशुद्धानन्दं मे सकलहितबुद्धिं परगुरुं
प्रणम्यादौ शुद्धं सततमविकल्पं निजसुखे ॥
तमाचार्यं सिद्धं निगमनिपुणाराधितपदं
समाधिस्थं शान्तं नृपवरजनैः सेवितसदम् ॥ १ ॥

समाहितान्तः करणस्वरूपं विलोकयन्नात्मनि पूर्णवैभवम् ॥
गोपालमानन्दसरस्वतिं गुरुं नमाम्यहं मस्करिणां वरिष्ठम् ॥ २ ॥

विदित्वा संसारं श्रुतगतधिया सारमखिलं
परं ब्रह्मेत्येवाखिलभवभयच्छेदनपरम् ॥
श्रुतिस्मृत्योस्तत्त्वं विमलधिषणाध्यापनरुचिं
मनीषानन्दाख्यं गुरुमिह सदा नौमि शिरसा ॥ ३ ॥

ॐ अथ वेदकल्पवृक्षस्वरूपवर्णनम् ।

ओ३म् ॥ ॐ ॥ ॐकारो यस्य मूलं क्रमपदजटरं छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरथ च फलं स्यादथर्वा प्रतिष्ठा ॥ यज्ञच्छाया सुशीता द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्या-त्रिकालं दुरितभयहरः पातु नो वेदवृक्षः ॥

ॐ अथ निगमप्राप्त्युपायः ।

ॐ सच्छायास्थिरधर्ममूलवलयः पुण्यालवालान्वितो धीविद्या-करुणाक्षमादिविलसद्विस्तीर्णशाखाच्युतः ॥ सन्तोषोज्ज्वलपल्लवः शुचियशःपुष्पः सदा सत्फलः सर्वाशापरिपूरको विजयते श्रीवेद-कल्पद्रुमः ॥ शिवं भवतु ॥

# अथ ज्ञानोदयः ।

श्रीगणेश्वराय नमः॥ प्रास्ताविकविषयो व्याख्यायते॥ अस्मिन्भारतवर्षे षडङ्गवेदोपवेदानां दर्शनादिशास्त्राणां या न्यूनता दरीदृश्यते तद्दूरीकरणायायं सरस्वतीरहस्य नामको ग्रन्थो निर्मितः, अस्य विरचने यानि यानि मुख्यकारणानि तानि तान्यधोलिखितानि सन्तीति सर्वे विद्वांसो विदांकुर्वन्तु ॥ वर्तमानसमये यथार्थज्ञानस्य दर्शनस्यानेकानि कारणानि प्रतीयन्ते तानि तु विदुषां बुद्धिगोचराणि सन्त्येव अतोऽस्याभावस्य दूरीकरणार्थं पूर्वोक्तवेदादीनां विषया अस्मिन्संक्षेपात्संस्कृतपरीक्षोत्तीर्णविद्यार्थिनां विद्यासाफल्यार्थं पृथक्त्वेन स्थापिताः सन्ति, विद्याजिज्ञासूनामर्थाय ब्रह्मचर्याश्रमस्थापनाय च तद्विषयोपायवर्णनं कृत्वा तत्स्थापनप्रचारप्रयत्नः कृतः अस्य पठनपाठनाभ्यां छात्रजना स्सुखेन विद्याप्राप्त्यै समर्था भवन्ति, अहमष्टोत्तरशतश्रीयुक्तश्रीमत्परमहंसपरिव्राजकाचार्य्यमुकुन्दानन्दसरस्वतीनामधेयैः स्वगुरुभिरायसाक्षरैर्मुद्रापितमिदं पुस्तकमष्टोत्तरशतश्रीयुक्तश्रीमन्महाराणोद्यानेऽकस्मादेक-

स्माद्ब्राह्मणादविन्दम् ॥ तत्प्रेम्णा पठन्नागमनसमये तदु-
द्यानकेतन्मधुपाटवीसमीपनिर्झरप्रदेशे माध्याह्निककृत्या-
नुष्ठीयमानानां स्वामिनां साक्षादकस्माद्रमणीयमूर्तेरी-
क्षणमभवत्तेन स्वान्तेऽविरतानन्दः समजनि ॥ तत-
स्तेषां मुखारविन्दगलितवाक्यामृतरसेनापि चित्तशु-
द्धिमलभे, पुनस्तैरेव साकं तदाश्रमेऽगमम् ॥ ततोऽ-
स्यैका प्रतिर्मह्यं विचाराय श्रीपरमगुरुभिर्दत्ता तं दृष्ट्वा
यथावत्सन्तोषामृताकूपारे मुहूर्त्तमात्रं निमग्नो जातः ॥
ततः पुनरुन्मज्ज्य यदा प्रकृतौ स्थित आसन्तदा
स्वामिभिराज्ञप्तोऽस्य प्रस्तावलेखनस्यारम्भमकरवम् ॥
तदा स्वसौभाग्यं ज्ञात्वा सहर्षोऽहं यथाशास्त्रं शब्दशा-
स्त्रानुसारेण सर्वसज्जनमहाशयानां हितायैनां स्वामिप्र-
स्तावनां व्यरचयम्, बहुकालान्मे मनस्ययमासीद्वि-
चारो यथा पूर्वकाले जगदुद्धारायर्षयो विचलन्तोऽवनिं
पावयन्ति स्म, तथैवैते स्वामिनोऽपि तीर्थेषु यदृच्छया
जगदुद्धरणार्थं परिव्रजन्ति ॥ एषां धामचतुष्टययात्राक-
रणस्याप्ययमेवाभिप्रायो विज्ञातः ॥ येन प्राचीनमर्या-
दानुसारेण धर्मोन्नतिर्भवेत् ॥ तत्रापि तेषां महान् परि-
श्रमो गोब्राह्मणरक्षणायेति विशेषधर्मो विज्ञातः ॥
सत्यपि महति परिश्रमेऽस्मिन्कार्य्ये सहर्षा दुःखमग-
णयन्तो ब्रह्मानन्दरसमहोदधौ विक्रीडन्तो विचरन्ति ॥

विशेषतश्च श्रीबदरीनाथदर्शनं कृत्वैव मनस्ययं जजागार ॥ तत्र निरन्तरं सनातन धर्मस्यजीर्णोद्धारो भवितुमर्हतीति ॥ तन्निमित्तादेव राज्ञां विदुषां च प्रेरणया पुनस्तत्स्थापनं कारयन्ति, अत्र किमप्याश्चर्यं नास्ति ॥ कथम् ॥ बाल्यावस्थायामेव कश्चित्सत्पुरुषो महात्मा विरक्तश्चैष्वीदृशीमनुकम्पां चकार तयानेकदेशा आश्चर्यवत्प्रतीता अभवन् ॥ प्रायशः स्वामिनः सर्वत्यागिनो बभूवुः ॥ ततः शीतकाले वस्त्राभरणादींस्त्यक्त्वा स्तब्धाकारवृत्तिं प्राप्य वनेषु ब्रह्मानन्दनिमग्नाः सन्तो निवसन्ति स्म ॥ कारणमत्र तन्महात्मनः संग एव ॥ यथाह्यप्रतिमवीर्य्यशौर्य्यात्मसाक्षात्कारादिगुणसम्पन्नेन भगवतर्षभेणायं श्लोको भाषितः ॥ "महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां संगिसंगम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये ॥ १ ॥" इति ॥ ततस्तत्सुहृज्जनास्तत्रागत्य तं योगीशं स्वामिविषयेऽनेकान्यवाच्यानि श्रावयामासुः ॥ अतस्तन्महायोगिना स्वामिबुद्धावित्थं प्रेरणा कृता ॥ यत्प्रभावेणारण्यं विहाय योगीशसमीपं समाजग्मुः ॥ तत्रैव स्वामिसोदर्यभ्रातापि महाशोकाक्रान्तः कष्टमनुभवन्समागतवान् ॥ तन्महायोगिना स्वामिबुद्धौ प्रेरणयेत्थमुत्पादितो विचारस्तेन संसारप्रतीतिः पुनरपि जागृता शीतोष्णभानं चाभवत् ॥ पुनः स्वजनैः

सह गृहप्रवेशं कृत्वा तदनुसारेणैव लौकिकव्यवहारसेवनं कृतवन्तः ॥ तदनु पूर्वकर्मानुसारेण पुनरेको योगीश्वरस्तत्रैवाजगाम ॥ तेन योगाभ्यासस्य प्रत्यक्षानुभवः कारितः ॥ तत्संगादेव पुनः पूर्ववृत्तिर्जागृता बभूव ॥ तदनन्तरं वेदान्तशास्त्राणां प्रेम्णा सद्भिः सह भूयो विचारमकुर्वन् ॥ तदनुपूर्वोक्तमहानुभावस्य स्मरणे जाते तद्दर्शनायागच्छन् ॥ तत्र तेनेयमाज्ञा कृता भवान्वाराणस्यां संन्यासं कृत्वा सकलविद्यावलोकनं च कुर्वन्देशाटनं कुरुतात् ॥ तदाज्ञयेत्थमेवाभूत् ॥ सपादवर्षद्वयपरिमितकालं वाराणस्यां ब्रह्मचर्याश्रमरीत्योषित्वाऽष्टोत्तरशतश्रीयुक्तश्रीमद्विशुद्धानन्दसरस्वतीशिष्यगोपालानन्दसरस्वतीपरमहंसपरिव्राजकाचार्यसकाशाद्यथाविधि संन्यासदीक्षां गृहीत्वा दण्डग्रहणमकुर्वन् ॥ तदनन्तरं श्रीगुर्वाज्ञानुसारेण वाराणसीक्षेत्रतस्तीर्थाटनं कर्तुमगमन् ॥ तत्र यात्रानुक्रमः ॥ गंगासागरजगन्नाथरामेश्वरगोमतीद्वारकादिसंज्ञकानि तीर्थानि पवित्रीकुर्वन्तः प्रयागे द्वादशाब्दीयकुम्भपर्वयात्रार्थमाजग्मुः ॥

अथ च यात्रार्थं तीर्थेषु परिव्रजतां तेषां सपादवर्षद्वयान्तरमेव श्रीगुरोराश्वावाहनपत्रमवाप्य पुनस्तच्चरणसेवायां सत्वरमगमन् ॥ यात्राप्रारम्भकाले गुरुणेत्थं निर्देशः कृतः । यदियथाकथंचिदपिदिग्वाद्वादशसंख्यका ब्राह्मणाः

संन्यासयोग्या लभेरंस्तर्हि भवतोपदेष्टव्या यतस्ते मठाभिरक्षणं कुर्युः ॥ इति गुर्वाज्ञां गृहीत्वा गुरूपदेशप्रभावेणाद्यावधि विंशतिसंख्यका ब्राह्मणा उपदिष्टाः ॥ तदनु तान्सार्धं नीत्वा यात्रानन्तरं पुनः काशीमवापुः ॥ तदा पुनरित्थं विचारोऽभूत् ॥ अथ शिष्यपरम्परा नो वर्द्धयितव्या किन्तु चतुर्णामाश्रमाणां वर्णानां च जीर्णोद्धारकरणेनैव संन्यासपराकाष्ठा सिध्यति ॥ उक्तं च पारिव्राजकरहस्ये ॥ जगज्जीवनं जीवनाधारभूतं दण्डं परिगृहेत् ॥ इत्यादयः श्रुतयो लिखिताः सन्ति ॥ ताभिर्विवेच्य विदुषाद्युदवसिते प्राचीनानुपूर्व्या माध्याह्निके काले भिक्षाटनं कर्त्तुं प्रवृत्ताः ॥ अतः प्रसन्नान्तःकरणेन गुरुणाशीर्दत्ता ॥ भो वत्स त्वया यथावत्संन्यासपालनं कृतम्, परमेश्वरो भवत्संन्यासं निर्वहतु ॥ अपरं च मदीयदेहत्यागावसरो जातः ॥ अतो भवता यथाशास्त्रं समाधिसंस्कारः कार्य्यः ॥ तदनु तथैव बभूव ॥ तदनन्तरमुत्तरदिग्यात्रां कुर्वन् श्रीबदरीनाथदर्शनं विधाय तत्प्रभावेणायं विचारो जातः ॥ प्रथमतृतीयाश्रमाविदानीं नष्टप्रायौ वर्त्तेते ॥ अतस्तत्स्थापनार्थं पूर्वं तु श्रीबदरीनारायणाश्रममुख्याधिष्ठातृश्रीरावलेत्युपनामकं प्रत्याज्ञा कृता भवान्ब्रह्मचर्याश्रमस्थापनं करोत्विति ॥ तेनाप्यंगीकृतम् ॥ तदनन्तरं यात्रां

कुर्वन् टिहरीनाम्नीं राजधानीं समागताः तत्रात्यन्तसौशी-
ल्यवात्सल्यसात्त्विकादिगुणविशिष्टैको निगमागमपारंग
तः परमहंसपरिव्राजकाचार्ययोगीश्वरः स्वामी विज्ञानान-
न्दसरस्वती यतिवर्येण समागमो जातः ॥ तेनाज्ञा कृता
भवानत्र किंचित्कालं निवासमकरिष्यत्तदा महानान-
न्दोऽभविष्यच्छाङ्करभाष्यस्य श्रवणमनननिदिध्या-
सनसाक्षात्काराणां यथावल्लाभो भविष्यति ॥ एवं
श्रुत्वा सार्धषाण्मासिककालावधि तेन सह वासं कृत्वा
तथैवाचरितम् ॥ काचिद्व्याकरणस्यापि युक्तिः
पठिता ॥ तदनन्तरं तीर्थाटनं कुर्वता हरिद्वारे ऋषि-
कुलाश्रमे चातुर्मास्यसमाप्तिः कृता ॥ तत्रर्षिकुलप-
ण्डिताः सद्ब्रह्मचारिणश्च सविनयं विद्याप्राप्त्युपायप्रश्न-
मकुर्वंस्तदा स्वामिभिः श्रीभगवत्सरस्वत्युपासनै-
वैको मुख्योपायोऽस्तीत्युत्तारितम् ॥ तदा तेऽप्रच्छन्भ-
गवन् ! कृपयास्माकमुपदेशं करोतु यतः पूर्वस्मिन्काले
यादृशा ऋषयोऽभवँस्तादृशा वयमपि भवाम
इति श्रुत्वा भवद्भ्यः सरस्वतीरहस्यं दास्यामीति
प्रतिज्ञाय यदोत्तरदिशि त्रयोदशमासावधि स्थितिं
कृत्वा वेदशास्त्रादिभ्यो यत्सरस्वतीरहस्यं संगृहीतं
तत्काश्मीरीयपण्डितवरजानकीनाथशर्म्मणः साहा-
य्येनेन्द्रप्रस्थपत्तने सहस्रसंख्यात्मकं प्रथमावृत्तौ मुद्रा-

पयित्वा ऋषिकुलादिपाठशालासु ब्रह्मचारिभ्यः प्रदत्तम् ॥ ततोऽलवरराजधानीमवाप्यास्यैव द्वितीया-वृत्तौ काश्मीरीयपण्डितवरकाशीनाथशर्म्मणः साहा-य्येन प्रकाशं नीतम् ॥ पुनस्तत्रैव तृतीयावृत्तौ तत्रत्यभू-पतिमन्त्रिणः कोलेत्युपाधिभूषितकाश्मीरीयदयाकृष्ण-शर्म्मणः साहाय्येन मुद्रापयित्वा प्रकाशितम् ॥ एतानि पुस्तकानि स्वसाकं नीत्वा ततो भारतभुवं पुनानाः पुस्तकानि च छात्रवर्गेभ्यो ददन्तः श्रीपुष्करतीर्थ-माजग्मुः ॥ तत्र श्रीमद्दरभंगानरेशरमेश्वरसिंहशर्म्मणा सह समागमो जातः ॥ तमपि विद्यानुरागपरोपकारा-दिगुणविशिष्टं ज्ञात्वेदमेव पुस्तकं ददुः ॥ तेनापि पुस्त-काशयं विचार्य प्रसन्नान्तःकरणेन संपृष्टाः किं श्रीब-दर्याश्रमाध्यक्षरावलमहाशयेन स्वीकृतम् ॥ टिहरी-नरेशेनापि स्वीकृतं किम् ॥ इति श्रुत्वा उक्तं च तैः सम्यगंगीकृतम् ॥ अतस्तस्यापि दृढविश्वासोऽभ-वत् ॥ पुनरेवं च कथयांचकार ॥ अनेनैव भारतवर्षे पुनरपि पूर्ववद्विद्याप्रचारो भविष्यति ॥

पुनः स्वामिन ऊचुः ॥ भवतां विश्वविद्यालयस्था-पनार्थं भिक्षां कुर्वतां द्वादशाब्दाः समतीताः ॥ तथापि प्रतिज्ञातमपि द्रव्यं कोपि न प्रयच्छति ॥ अतो भवा-

न्स्वकोशादेवैककोटिरूप्यकाणि ददातु ॥ यतः शीघ्र-
मेव विश्वविद्यालयस्थापनं भविष्यति तच्छ्रुत्वा क्षण-
मात्रं तूष्णीं बभूव ॥ पुनः कथयाञ्चकार ॥ अहमुदयपुर-
महाराजसविधे विश्वविद्यालयभिक्षार्थं गच्छामि ॥
चित्रकूटोऽतीवोत्तमोऽस्ति भवानपि तं पश्यतु ॥ पुन-
श्चित्रकूटं दृष्ट्वा ब्रह्मानन्दरसमहोदधौ निमग्नान्तःकरणाः
अद्वैतध्यानपरायणाः सन्तः जगतीतलनिवासिजनान्
दर्शनादिद्वारा पावयन्तो मेदपाटदेशोदयपुरराजधान्यां
सुस्वागतेन श्रीनीलकण्ठेश्वरमन्दिरेऽत्रत्यप्रजापवित्रीक-
रणाय सप्तत्यधिकैकोनविंशतितमे वैक्रमाब्दीये चातु-
र्मास्योपासनां वर्णाश्रमजीर्णोद्धारानुष्ठानपूर्विकां चक्रुः
तदवसरे श्रीश्रीश्री १०८ श्रीश्रीमदार्यकुलकमलदिवा-
करश्रीमन्महाराणेत्युपाधिभृता सुस्वागतेनाहूय तत्सर्वं
जगदुपकारकं वृत्तं श्रुत्वा प्रसन्नान्तःकरणेन श्रीमदेक-
लिङ्गेश्वरपुर्य्यां ( कैलासपुर्य्यां ) श्रीमदृषभदेवनगर्य्याञ्च
ब्रह्मचर्य्याश्रमं प्रवर्तयिष्यामीति प्रतिज्ञायेदं सरस्वती-
रहस्यं चतुर्थावृत्तौ मुद्रापितम् । इदानीं पञ्चमावृत्तौ
च श्रीस्वामिभिः मोहमय्यां राजधान्यां मुद्रणार्थं
प्रेषितमस्ति ॥

स्वामिनामस्मिन्कार्यकरणे किमप्याश्चर्यं नास्ति वक्ष्यमाणगुणविशिष्टाः सन्त्येव "पापस्य नामापि न च ब्रुवाणे शत्रूनपि स्वानिव मन्यमाने ॥ आजन्म शुद्धे श्रुतिषु प्रबुद्धे विद्यातपोभिर्नितरां समिद्धे ॥ १ ॥ मन्त्रैर्वशीभूतसमस्तदेवे विशेषतः शम्भुपदाब्जसेवे ॥ अथर्वसम्प्राप्तबलेपि शान्ते बृहस्पतित्वेपि विवादकान्ते ॥ २ ॥ न क्रोधलेशस्य गिरा नशक्तेः पूर्वोक्तसिद्धान्तकथाविभक्तेः ॥ तस्यातिधीरस्य च लोपमाने वादी व्यतीतः कतिचिद्दिनानि ॥ ३ ॥ धर्मार्थमासे विलसत्सुशिष्ये समुद्भवे धर्मदयापवित्रे ॥ अकारणाद्विश्वजनैकमैत्रे धर्माश्रितैर्गीतमहाचरित्रे ॥ ४ ॥ आर्यावर्त्तनिवासिनां परतरब्रह्मानुसन्धायिनां शान्तैर्दान्तमुखैर्गुणैर्विरचितैश्चारूढभावं गताः ॥ अष्टौ सद्यशसा शुकस्य तुलिता लोकं पुनन्तो मुदा श्रीपीठापुरपत्तनं प्रविविशुः क्रुध्याब्दशुक्रेमले ॥ ५ ॥" ?

अथाहमिमां श्रीस्वामिनां संक्षेपप्रस्तावनां समाप्तां कुर्वन् सकलसज्जनान् विज्ञापयामि सरस्वतीरहस्यस्य पठनं पाठनं च प्रेमतो यदि करिष्यन्ति तदा मनोभिलषितफलं प्राप्स्यन्तीत्यलं बुद्धिमद्भ्येषु ॥

इयं संक्षिप्तप्रस्तावना मेदपाटीयोदयपुरस्थेन मयोदीच्यज्योशीत्युपाह्वयेन पण्डितधनेश्वरशर्म्मणा श्रीस्वामिसकाशात्संकेतं प्राप्य स्वबुद्ध्यनुसारेणालेखि ॥ यद्य-

स्मिन्यत्र कुत्रापि स्खलितं चेत्तत्क्षमित्वा भवतां शुभ-चिन्तकोऽहं सूचयितव्यः ॥ यत आगाम्यावृत्तौ शुद्धि-र्भविष्यतीत्याशास्महे ॥

ॐ

गुलाबोपवने रम्ये नीलकण्ठस्य मन्दिरे ॥ मुकुन्दा-नन्दयोगीन्द्रो दण्डी ब्रह्मविदां वरः ॥ १ ॥ महाभाग-स्तपोमूर्तिः पुण्यात्मा पुण्यदर्शनः ॥ तस्य वाक्यप्र-दानेन सिद्धिर्भवति सत्वरम् ॥ २ ॥ कुरु सेवां तस्य नित्यं पवित्रां फलदायिनीम् ॥ मनसा कर्मणा वाचा शमिच्छसि त्वमात्मनः ॥ ३ ॥ अभावो योगिनामत्र वसुधायां च सर्वदा ॥ पुण्यवन्तं च जानेऽहं पादसेवां करोति यः ॥ ४ ॥ सोऽपि धन्यतरो लोके ब्रह्मानन्दञ्च गच्छति ॥ सौख्यं नानेन सदृशं पृथिव्यां क्वापि लभ्यते ॥ ५ ॥ बद्धाञ्जलिरहं मन्ये यतीशं ध्वंसक-ल्मषम् ॥ नित्यं तद्दर्शनं भाव्यमियमेका हि कामना ॥ ६ ॥ मुकुन्दानन्दयोगीशं ब्रह्मज्ञानपरायणम् ॥ संसारानलदग्धोऽहं प्रणमामि मुहुर्मुहुः ॥ ७ ॥ इह कुत्रापि नो शान्तिः संसारे दहनोपमे ॥ ब्रह्मज्ञानो-पदेशेन कुरु शान्तिं दयानिधे ॥ ८ ॥

कविबहादुरसिंहदेवलिया अजयमेरौ
सम्प्रति उदयपुर.

कृतार्थानां कर्तृत्ववर्णनम्.

ॐ श्रीगणेश्वराय नमः ॥ पृथिव्यामज्ञानाम्भवद्-दनसंतप्तमनसाम्भवाब्धौ मग्नानां कुटिलहृदयानां च कलये॥नृणामुद्धारार्थं हरिविधिहरैः प्रेषितमिव मुकुन्दा-नन्दाख्यं यतिवरमहो दण्डिनमिव ॥ १ ॥ सुशास्त्रज्ञं नित्यं सदयहृदयेभ्यैरभिनुतं गरिष्ठं भूयिष्ठं विमल-तरचित्तं सुखकरम् ॥ भजे नित्यानित्यप्रललितवचो-भिश्च मनुजान्मुकुन्दानन्दाख्यं० ॥ २ ॥ परित्यक्तं बाल्ये निखिलविषयाभोगरचनां स्वबुद्धया संचिन्त्य-स्वजनिमरणक्लेशकरिणीम् ॥ भजे स्वात्मानन्दे विगत-दुरिते लीनमनसं मुकुन्दा० ॥ ३ ॥ मृडानीशाराध्यं मदनपितृवन्द्यं विधिनुतं सुधाम्भोधौ सुप्तं सुकविवर संसेविततनुम् ॥ परं पारं यातं किल निखिल शास्त्र-स्य कलये मुकुन्दानन्दाख्यं० ॥ ४ ॥ अटन्तं भूमध्ये बत भुवनरक्षार्थमधुनाप्यहो गोरक्षायै निजकुलविवृ-द्धयर्थमपि च ॥ स्वधर्मज्ञं त्वज्ञद्रुमगणनिहन्तृप्रियतमं मुकुन्दा० ॥ ५ ॥

ॐ रमन्तं श्रीकाश्यां विगतकलुषैरात्मनिरतैर्यतीन्द्रै-स्सानन्दं दिवि सुरगणैः शक्र इव हि ॥ सदा वे-दान्तार्थाध्ययननिरतं योगनिरतं मुकुन्दानन्दाख्य यतिनमिह वन्दे सुहृदयम् ॥ ६ ॥ धरित्री देवेभ्यै

रभिनुतपदाब्जं त्वभयदं सुशिष्यैः संसेव्यं मृगवरनि-
भास्यं गतरुषम् ॥ समाधिस्थं पूज्यं सरसिजनि-
भाक्षं हृदि भजे मुकुन्दा० ॥ ७ ॥ धरायां भूदेवैः
सह नभसि ऋक्षैश्च शशिराड्यथा कुर्वन्कुर्वंस्तदनु नित
रामर्थविदयम् ॥ स्वधर्मार्थाकांक्षी विजयतु भुवं वेद-
वचसा मुकुन्दानन्दाख्यः कमलदलनेत्रप्रियमनाः ॥८॥
मुकुन्दानन्दकर्मन्दिवर्य्यस्यास्त्वाष्टकं शुभम् ॥ केन-
चिद्दक्षिणात्येन विद्यानन्देन निर्मितम् ॥ ९ ॥

श्रीमच्छ्रीपरमहंसपरिव्राजकाचार्य्यवर्य्यपदवाक्यप्रमाणपारावारीणयमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठतपश्चक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्यव्याख्यानसिंहासनाधीश्वरसकलनिगमागमसारहृदयसांख्यत्रयप्रतिपादकवैदिकमार्गप्रवर्तकसर्वतन्त्रस्वतन्त्रादिराजधानीविद्यानगरमहाराजधानीकर्णाटकसिंहासनप्रतिष्ठापनाचार्य्य श्रीमद्राजाधिराजगुरुभूमण्डलाचार्य्यऋष्यशृङ्गपुरवराधीश्वरतुङ्गभद्रातीरवासपादपद्माराधकश्रीमच्छ्रीपरमहंसपरिव्राजकाचार्य्य श्रीमुकुन्दानन्दसरस्वतिकृतो यत्नो भूमिकायां निरूप्यते॥संस्कृतभूमिकेयम्॥

अथायं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यद्वेदविद्याधिगमः ॥ अस्यार्थः ॥ अयं वाव खल्वस्येत्यादिनाऽस्य भूतात्मनोऽयं वावायमेव खलु प्रतिविधिः प्रतिविधानं प्रतिक्रिया भूतात्मत्वप्रहाणोपायः । कोऽयम् । यद्योऽयं वेदविद्याधिगमः । वेदद्वारा विद्याया आत्मतत्त्वविषयाया अधिगमः सम्यक् प्राप्तिरित्यर्थः ॥ कथं विद्याधिगमो वेदादित्यपेक्षायां विविदिषन्ति यज्ञेनेत्यादि श्रुत्यन्तरविनियोगानुरोधेन स्ववर्णाश्रमविहितधर्म्मानुष्ठानप्रभावकृतः स्वान्तशुद्धिं विना न

ज्ञानाधिगमः ॥ इत्यभिप्रायेणादौ बहिरंगाणि कर्माणि विदधाति ॥ ॐ स्वधर्म्मानुचरणम् ॥ स्वधर्मस्येत्यादिना ॥ स्वो धर्मः स्वधर्म आवश्यकं कर्म तस्यानुचरणम् ॥ अनुक्रमेणानुष्ठानम् ॥ ब्रह्म खल्विदं वाव सर्वम् ॥ ब्रह्मसर्वमिति । इदं सर्वं ब्रह्म वाव ब्रह्मैव खल्वित्यन्वयः ॥

तथा च श्रुत्यन्तरम्—सर्वं खल्विदं ब्रह्म ॥ तज्जलानिति शांत उपासीत-( छान्दोग्य० अ० ३ ) इति अस्यार्थः—सर्वमिदमध्यात्ममधिदैवमधिभूतं वाऽशेषं जगद्ब्रह्मैव खलु नात्र संशयः कार्यः । कुत इत्यपेक्षायां हेतुमाह तज्जलानितीति । तस्माज्जात इति तज्जः तस्मिँल्लीयत इति तल्लं तेनानिति चेष्टत इति तदनम् । छान्दसः इति शब्दो हेत्वर्थः ॥ तस्माद्ब्रह्मणो जातत्वात्तस्मिन्नेव लीयमानत्वात्तदाश्रयजीवनत्वाच्च तदेवेदं ब्रह्म यथा मृत्सुवर्णाद्युत्पत्तिस्थितिलया घटकुण्डलादयो मृत्सुवर्णाद्यात्मकास्तथेमे तस्मात्तथेति । यद्यप्येवं सर्वमेव ब्रह्मणः शरीरं तथापि यत्स्वस्मादुत्कृष्टत्वेनाभिमतं तदुपास्यम् ॥ देवाहि मनुष्याणामुत्कृष्टत्वेनाभिमता अन्नादयश्च जीवनहेतुत्वात्तथाभिमानयोग्या इत्यतस्ते ब्रह्मणोऽग्र्यास्तनव इति ब्रह्मदृष्ट्योपास्या इत्याह ॥

## ब्रह्मोपासनवर्णनक्रमो निरूप्यते ।

ॐ शुचौ देशे शुचिः सत्त्वस्थः सदधीयानः सद्वादी सद्ध्यायी सद्याजी स्यादित्यतः सद्ब्रह्मणि सत्यभिलाषिणि निवृत्तोऽन्यस्तत्फलच्छिन्नपाशो निराशः परेष्वात्मवद्विगतभयो निष्कामोऽक्षय्यमपरिमितं सुखमाक्रम्य तिष्ठति ॥ १ ॥ परमं वै शेवधेरिव परस्योद्धरणं यन्निष्कामम् ॥ २ ॥ स हि सर्वकाममयः पुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः ॥ ३ ॥ अत्रैक आहुर्गुणः प्रकृतिभेदवशादध्यवसायात्मबन्धमुपागतोऽध्यवसायस्य दोषक्षयाद्विमोक्षः ॥ ४ ॥ मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव ॥ ५ ॥ गुणौघैरूह्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लुप्यमानः सस्पृहो व्यग्रश्चाभिमानित्वं प्रयात इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानं जालेनेव खचरोऽतःपुरुषोऽध्यवसायसंकल्पाभिमानलिङ्गो बद्धोऽतस्तद्विपरीतो मुक्तः ॥ ६ ॥ तस्मान्निरध्यवसायो निःसंकल्पो निरभिमानस्तिष्ठेत् एतन्मोक्षलक्षणमेषाऽत्र ब्रह्मपदव्येषोऽत्र द्वारविवरोऽनेनास्य तमसः पारं गमिष्यति ॥ ७ ॥ अत्र हि सर्वे कामाः समाहिता इत्यत्रोदाहरन्ति ॥ ८ ॥

## ब्रह्मोपासनार्थं गुरुशिष्यलक्षणम् ।

'ॐ तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इत्यादिषु श्रुतिषु स्वर्गादिसुखस्यानित्यत्वमाम्नायते मुण्डकेष्वपि 'प्लवा ह्येते अदृढा यज्ञरूपाः' इत्यादिना नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं चाविशन्ति । इत्यन्तेन स्वर्गादिसुखस्य क्षयितामाम्नायतपः श्रद्धे ये 'ह्युपवसन्त्यरण्ये' इत्यृचा निवृत्तिनिष्ठस्य परमपुरुषार्थसिद्धिरुच्यते । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं सुगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । इत्यादिना श्रद्धापूर्वकोपसत्तिशमादिगुणविशिष्टं प्रत्येवोपदेश आचार्य्येण कर्त्तव्य इति विधीयते न तु तद्रहितं प्रति अत एव शमदमादिसम्पन्नस्यैवात्मदर्शनं माध्यन्दिना दर्शयन्ति तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्येत्सर्वमात्मनि पश्यतीत्यादिना किञ्च कलिकालकरालविशालव्यालग्रस्तानां जनानां विशिष्टं भगवद्भजनमपि पापक्षयद्वारा कलिसमुत्तरणपूर्वकपरमपुरुषार्थ-

साधनं मन्त्रब्राह्मणस्मृतीतिहासपुराणादिषु 'तमुस्तोतारः पूर्व्यं यथा विदिऋतस्य गर्भं जनुषा पिपर्त्तन अस्य जानतो नाम चिद्विविक्तनमहस्ते विष्णो सुमतिं भजाम' इत्यादिऋग्वेदमन्त्रेण 'भर्त्ता संभ्रियमाणो बिभर्त्ति' इत्यादियजुर्वेदमन्त्रेण 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादि सामवेदमन्त्रेण 'भक्तिरस्य भजनम्' इत्याद्यथर्ववेदमन्त्रेण अथ हैनं ब्रह्मचारिणम् ऊचुः किं जप्येनामृतत्वं ब्रूहीति सहोवाच याज्ञवल्क्यः 'शतरुद्रीयेणेत्येतानि ह वा अमृतस्य नामधेयानि एतैर्ह वा अमृतो भवति' इत्यादिजाबालब्राह्मणेन यः शतरुद्रीयमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स ब्रह्महत्यायाः पूतो भवति कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेदनेन ज्ञानमाप्नोति संसारार्णवनाशनमित्यादिकैवल्यब्राह्मणेनापि निरूपितम् ॥

## ब्रह्मज्ञानस्य किं फलमित्युच्यते ।

ॐभिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्म्माणि तस्मिन्दृष्टे परावरे ॥ ब्रह्मात्मैकत्वविज्ञानं शाब्दं दैशिकपूर्वकम् । बुद्धिपूर्वकृतं पापं कृत्स्नं दहति वह्निवत् ॥ यस्यानुभवपर्यन्तं तत्त्वे बुद्धिः प्रवर्तते । तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वपातकैः ॥ कुलं

पवित्रं जननी कृतार्था विश्वम्भरा पुण्यवती च तेन ॥ अपारसंवित्सुखसागरेऽस्मिँल्लीनं परे ब्रह्मणि यस्य चित्तम् ॥ वेदान्तसारसर्वस्वमज्ञेयमधुनातनैः ॥ अशेषेण मयोक्तं तत्पुरुषोत्तम यत्नतः ॥ स्नातं तेन समस्ततीर्थसलिले सर्वाऽपि दत्तावनिर्यज्ञानां च कृतं सहस्रमखिला देवाश्च सम्पूजिताः ॥ संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्योऽप्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ॥

## कृतार्थानां कर्तृत्ववर्णनम् ।

रत्नाकरः किं प्रकरोति रत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ पिबन्ति नद्यः स्वयमेव नोदकं स्वयं न खादन्ति फलानि वृक्षाः । धाराधरो वर्षति नात्महेतवे परोपकाराय सतां विभूतयः ॥ ॐ त्रिष्वेकपाच्चरेद्ब्रह्म त्रिपाच्चरति चोत्तरे ॥ तदुक्तं कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्येण सिध्यतः ॥ किं बहुना इत्यादिना । प्रारब्धफलं त्रिविधं स्वेच्छाकृतं परेच्छाकृतम् अनिच्छाकृतं चेति । तत्र व्युत्थानदशायामीश्वरप्रेरिततया स्वकीयेच्छाकृतं स्वेच्छाकृतं भिक्षाटनादि । समाध्यवस्थायां शिष्यादिभिर्दीयमान-

मन्त्रादिकं परेच्छाकृतम् । समाध्यवस्थायां व्युत्थान-दशायां वा आकाशफलपातवदकस्माज्जायमानं पाषाणपतनकंटकवेधादिकमनिच्छाकृतम् । स चायं जीवन्मुक्तः प्रोक्तत्रिविधप्रारब्धप्रापिकं सुखदुःखमनुभवन्बुद्ध्यादिसाक्षितया सर्वावभासकः सन् भोगेनारब्धकर्म्मक्षये सति प्रत्यगभिन्नपरमात्मनि प्राणादिलयानंतरं प्रनष्टाविद्यकसंसारः कृतकृत्यः सन् गलितसकलभेदप्रतिभासो ब्रह्मैवावतिष्ठते इति सकलवेदरहस्यतात्पर्य्यमित्यर्थः ॥

## कृतकृत्यवर्णनम् ।

अयं जीवन्मुक्तो बुद्ध्याद्युपाधिविलये सति घटाद्युपाधिविनिर्मुक्ताकाशवन्मुक्त इत्युपचारव्यवहारभाग्भवति बद्धत्वस्याप्यवास्तवत्वात् । तदुक्तमाचार्यैः "न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥ न मुमुक्षुर्न वा मुक्त इत्येषा परमार्थता" अस्य जीवन्मुक्तस्योपाधिविगमसमये प्राणाख्यं लिंगशरीरम्। अतितप्तलोहक्षिप्तनीरबिन्दुवत्प्रत्यगभिन्नपरमानंदे लीनत्वात्स्थूलशरीरं नोत्तिष्ठतीति । अत्र श्रुतिमाह । न तस्येति । अयं जीवन्मुक्तो जीवन्नेव दृश्यमानाद्रागद्वेषादिबन्धनाद्विशेषेण मुक्तः सन् वर्तमानदेहपाते सति भाविदेहबन्धाद्विशेषेण

मुच्यत इत्यत्रापि श्रुतिमाह विमुक्तश्चेति। बृहदारण्यकेपि "यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि स्थिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥ वासिष्ठेपि "जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते। भवत्यदेहमुक्तत्वं पवनोऽस्पंदतामिव" इति "असंगोह्ययं पुरुष आकाशवत्सर्वगतश्च नित्यः। अस्नाविरं शुद्धमपापविद्धम् ॥" इत्यादिश्रुत्या प्रत्यगात्मनो नित्यत्वपरिपूर्णत्वकूटस्थत्वश्रवणात् उत्पत्त्याप्तिविकृतिसंस्कारचतुर्विधक्रियाफलविलक्षणत्वेन विद्यया नित्यनिवृत्ताविद्यामात्रेण प्राप्त एवात्मा पुनः प्राप्त एवेत्युपचर्य्यंते अधिष्ठानस्य गमनाभावेऽध्यस्तस्य लोकान्तरगमनायोगान्न सालोक्यादिमुक्तिसम्भवः ॥

ग्रन्थेष्वनुबन्धचतुष्टयं भवति । अधिकारिविषयसम्बन्धप्रयोजनानीति। तत्राधिकारी ॥ प्रशान्तचित्ताय जितेन्द्रियाय प्रक्षीणदोषाय यथोक्तकारिणे।गुणान्वितायानुगताय सर्वदा प्रदेयमेतत्सकलं मुमुक्षवे॥ विषयो जीवब्रह्मैक्यं शुद्धचैतन्यं प्रमेयम् । तत्रैव वेदान्तानां तात्पर्य्यात् ॥ १ ॥ सम्बन्धस्तु तदैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्प्रमाणस्य च बोध्यबोधकभावलक्षणः ॥२॥ प्रयोजनन्तु तदैक्यप्रमेयगताज्ञाननिवृत्तिः तत्स्वरूपानन्दावाप्तिश्च ॥ ३ ॥ "तरति शोकमात्म

वित्" इत्यादिश्रुतेः । "ब्रह्मविद् ब्रह्मैव भवति" इत्यादिश्रुतेश्च ॥ ४ ॥

## अथ गुरुपरमात्मनोरैक्यवर्णनम् ॥

ॐ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इत्यादिश्रुत्या गुरुनमस्कारस्यापि शास्त्राङ्गत्वप्रतिपादनात्तन्नमस्कारोऽप्यवश्यं पृथक्त्वेन कार्य इति ॥ ॐ विचारयाम्यहं नित्यं वेदतत्त्वार्थमादरात् ॥ एषामनुग्रहात्तेभ्यो गुरुभ्योऽस्तु नमः शतम् ॥

## ओं सर्वसाधारणको सूचना ।

ॐमातृमान् पितृमानाचार्यवान् पुरुषो वेद ॥ यान्यस्माक[१]सुचरितानि तानि त्वयोपास्यानि नो इतराणि ॥

प्राचीनकालमें जब हमारे भारतवर्षमें ब्रह्मचर्य्यके पालन करनेकी प्रथा बड़ी बलवती थी तब यह भारतवर्ष सब प्रकारके वैभवोंसे उन्नतिके शिखरपर चढ़ाहुआ था परन्तु जबसे इस भारतवर्षसे यह प्रथा लुप्त हुई तबहीसे भारतवर्ष अवनतिके कूपमें गिरगया । ब्रह्मचर्य्यसे जो लाभ होते हैं इनका वेदादि सच्छास्त्रोंमें खूब विस्तारपूर्वक वर्णन कियाहै ब्रह्मचर्य्यसे मनुष्य

---

१ श्रीसद्गुरुकृपालोकलेशालम्बबलादिदम् । यथामति मयालेखि क्षन्तव्यं स्खलितं बुधैः ॥ आनन्दकाले बहुराजलक्ष्मीशिवप्रसादोत्र करोति सिद्धिम् । बध्नाहृतं विघ्नविनाशनं च ददामुकुन्दं शरणारविन्दे ॥

तेजस्वी होता है शरीरमें दृढता अर्थात् पुष्टता आती है विद्याका विकास ( प्रकाश ) होता है आत्मा बलवान् होता है। जिन बातोंको, मनुष्य वर्षोंके परिश्रमसे नहीं समझ सकते उनको ब्रह्मचारिजन थोड़ेही परिश्रमसे शीघ्र समझ लेते हैं। प्राचीनकालके ऋषि महर्षि योगी ब्रह्मचर्य्यहीके बलसे वे वे अद्भुत कार्य करगये हैं कि जिनका कल्पकल्पान्तरमें भी विनाश नहीं होगा छोटे छोटे सूत्रों और वाक्योंमें उन्होंने शास्त्रोंके बड़े बड़े गूढ़ अर्थात् बड़े बड़े गहन विषयोंको इस चातुर्य्यसे भरदिया है कि जिसका हम वर्णन नहीं कर सकते भीष्मकी शक्ति और ज्ञान ब्रह्मचर्य्यकाही मुख्य कारण था। हनुमान समुद्र फाँद लंकाको गये. लंकामें जाकर ऐसा बलवान् रावण जिसने इन्द्रादिकोंको परास्त किया था उसको भी हनुमानने परास्त किया इसमें भी कुछ प्रधान कारण उनका ब्रह्मचर्य्य था। रामचन्द्रजीके वियोगमें १२, वर्षतक भरतजीने तपस्या की थी यह उनका ब्रह्मचर्य्यही मुख्य कारण था कि उन्होंने एक बाणसे पर्वतसहित ऐसे महावीर हनुमानको भूमिपर गिरादिया फिर एकही बाणसे हनुमानको क्षणभरमें अयोध्याके समीपसे लंकामें पहुंचा दिया॥ और शिल्प, कला, कौशल, विज्ञान, कोई भी विद्या क्यों न हो जबतक मनुष्य ब्रह्मचर्य्य नहीं पालन करेगा अच्छी तरह नहीं सीख सकेगा इसलिये कभी इस काममें पश्चात् पद नहीं

रहना चाहिये वेदान्तादि कठिन विद्याएं बिना ब्रह्मचर्य्यके पालन किये कभी नहीं समझमें आती, यदि हम चाहते हैं कि हमारी विद्याएं सफल हों और हम उन्नतिके शिखरपर चढ़ें तो हमें ब्रह्मचर्य्यके विषयको कभी उपेक्षाकी दृष्टिसे नहीं देखना चाहिये मठों व मन्दिरों और आश्रमोंमें इसके प्रबन्धमें कुछ कठिनता नहीं वहां खाने पीने पढ़ने द्रव्य खर्च करने इत्यादिका पहलेसे प्रबन्ध रहता है उनके पास लाखों रुपयेकी आमदनी है वह चाहें तो इसका प्रबन्ध बहुत थोड़ेही दिनोमें ब्रह्मचर्य्यव्रत सफल कर सकते हैं यह ब्रह्मचर्य्य सर्वोत्कृष्ट अल्पदिनसे लुप्त हुआ है । कारण कि गौवोंका हनन जबसे इस कर्मभूमि भारतमें होनेलगा तबसे ही ब्रह्मचर्यादि सद्धर्म नष्ट होगये हैं । इसमें गवर्मेन्टको हम लोग धन्यवाद देते हैं कि जिन्होंने प्राचीन पुस्तकोंका जीर्णोद्धार किया है । इसवास्ते आवश्यक है कि इन लोगोंसे और द्वीपान्तरोंसे शिक्षाका जीर्णोद्धार करना चाहिये ।

श्लोक—स्वयमेव प्रतिज्ञातो महाराणेन धीमता ।
स्वामिना दण्डिना सत्रा योगिना कार्यसिद्धये ।
उद्धारं च करिष्यामि विलम्बो न भविष्यति ।
एकलिङ्गः शिवो यत्र ऋषभो देवता तथा ॥
इमौ च सुषुमायोग्यौ चाश्रमार्थं तथैव हि॥३॥

किमधिकम् ॥

ॐसंपूर्ण शास्त्रकारोंने यह द्विजमात्रके लिये दोनों प्रकारके कर्म निर्दिष्ट किये हैं धर्मार्थ और जीविकार्थ दोनों प्रकारके कर्म्मोंमें कुशल होनेकी पृथक् २ योग्यता द्विजमात्रको पूर्ण-रीतिसे विद्याद्वारा प्राप्त कराई जावै और सामयिक सभ्यतामें भी उन्हें अपरिचित न रक्खा जावै । पूर्वोक्त संकल्पको कार्यरूपमें परिणत करते हुए हिमालयके इस सुप्रसिद्ध तीर्थ श्री १०८ श्रीबद्रीनारायणके खजानेसे नियत करना अंगी-कार कराया है । इसमें पूर्वोक्त कर्मकाण्ड आदिकी सब योग्यता प्राप्ति करनेकी पूर्ण सुबिधा कीगई है । बीस वर्षकी आयुतकका ब्रह्मचर्य्यव्रत यहां रक्खा गया है अर्थात् आठ वर्षका बालक १२ वर्ष यहां निवास करेगा और १० वर्ष-का कुमार १० वर्षही ब्रह्मचर्य्यव्रतमें रहेगा । इसीक्रमसे १२ वर्षका छात्र ८ वर्ष यहां रहैगा । इससे अधिक अव-स्थाका छात्र प्रविष्टही नहीं होगा २० वर्षसे अधिक ब्रह्म-चर्य्य इस युगमें पूर्ण हो यह आशा बहुत कम की जा सकी है । यहांसे समावर्तन होनेके पश्चात् ब्रह्मचारी यदि किसी युनीवर्सिटीकी परीक्षोपयोगी विद्याको वा अन्यान्य सांसारिक विद्याओं तथा आजीविकाके अन्यान्य व्यवहारोंको सीखना चाहे तो भी उसे बहुत समय प्राप्त है यहांसे इन्ट्रेन्सतक भाषा योग्यताके उपयुक्त इंग्रेजी शिक्षाभी उसे मिल जायगी जो उन कार्योंमें सहायता देगी । इसी कारण २४ वर्षके ब्रह्मच-

र्यका नियम यहां नहीं रक्खा गया है क्योंकि उसके अनन्तर किसी अन्य शिक्षाका समय नहीं रहता। ब्रह्मचारियोंकी स्वास्थ्य रक्षाके लिये एक वैतनिक उत्तम वैद्य नियत रहेगा आहार व्यवहारका भी निरीक्षण करता रहेगा॥

वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्।
अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाविशेत्॥

चार प्रकारके जो ब्रह्मचारी पहले होते थे सो इसवक्त समयानुसार असम्भव मालूम देता है—क्योंकि १ एक वेदका पठन पाठन बीस वर्षतककी उमरमें करते थे २ दो वेदका पठन पाठन बत्तीस वर्षकी उमरतक करते थे ३ रे वेदका पठन पाठन ४४ वर्षकी उमरतक करते थे ४ चौथे वेदका पठन पाठन ५६ वर्षकी उमरतक करते थे ऐसे करते करतेमें सम्पूर्ण ज्ञान ऐश्वर्यको प्राप्त होते थे विचार करके यह निश्चय हुआ कि इस वक्त बीस वर्षकी अवस्था तक ब्रह्मचर्य आश्रमसे बालकोंको और १२ वर्षकी अवस्थातक कन्याओंको विद्या पढ़ानेमें सम्पूर्ण महाशय प्रयत्न करें और सब देशोंमें अपने अपने घरमें एक एक मिट्टीकी हांडी रखें उसमें नित्य रसोई बनानेके वक्त शक्तिके अनुसार अन्न डाला करें वह अन्न जहां ब्रह्मचारी आश्रम हो वहां वहां दिया करें जब इकट्ठा हो जाय तबतक किसी गरीब गृहस्थीको जिस दिन अन्न न हो तो उस्मेंसे लेवें॥

ॐ प्रथम भाग वेदसम्बन्धी-अब कहते हैं वेदोंका वर्णन-वेद चार हैं १ ऋग्वेद २ यजुर्वेद ३ सामवेद ४ अथर्ववेद। इनमेंसे प्रथम तीनका यज्ञ कर्मोंमें प्रधान करके प्रयोग है और चौथेका यज्ञोंमें जिनके वास्ते यह चार भाग वेदके वेदव्यासजीने करदिये थे बहुत प्रयोजन नही है। योरुपके विद्वानोंने यह निश्चय किया था कि सबसे पुरातन ऋग्वेद है। जिसमें ऋचासे गायन होता है, परन्तु आजकलके विद्वान् मानने लग गये हैं कि अथर्ववेदमें भी बहुत पुरानी ऋचा हैं। हमारे शास्त्रकारोंका मत ठीकही प्रामाणिक पायागया है। वह यह है कि समग्र वेदका मन्त्रभाग उस समय रलामिला था जब श्रीवेदव्यासजीने उसको चार यज्ञ करानेवाले ब्राह्मणोंके वास्ते जुदा जुदा ग्रन्थोंमें करदिया और उसका प्रकार यह है कि "होता" के वास्ते "ऋग्वेद" "अध्वर्यु" को "यजुर्वेद" "उद्गाता" को "सामवेद" और "ब्रह्मा"का "अथर्ववेद" ॥ बहुतसे एकवेदके मन्त्र दूसरे वेदमें दूसरेके तीसरेमें तीसरेके चौथेमें आजाते हैं जिसका आशय यह है कि ऐसे मन्त्र जो सबमें हैं सबही यज्ञ करानेवालोंको अपने अपने वेदके स्वर और रीति अनुसार पढने चाहिए ॥

दूसरा यह है कि ऋग्वेदमें कई जगह साम और यजुर्वेदके नाम आये हैं। यथा ऋ० १० मं० ८० अ० ९० सू० में यह मन्त्र आया है कि—"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि

जज्ञिरे । छन्दाᳬसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ १ ॥"
इससे सिद्ध हुआ कि ऋग्वेदके ऋषियोंको यजुर्वेद और साम-
वेद अज्ञात न थे इसीतरह यजुर्वेदके ३६ वें अध्यायका पहला
मंत्र यह है कि जिसमें ऋक् यजुः साम तीनोंके नाम आते हैं
यथा—"ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये
चक्षुः श्रोत्रं प्रपद्ये वागोजः सहौजो मयि प्राणापानौ" ॥
इसी तरह सामवेद प्र० ४ अर्ध प्र० २ का सबसे पिछला
मन्त्र यह है ॥ ऋचं साम यजामहे, यस्यां कर्माणि कृण्वते"।
विते सदसि राजतो यज्ञं देवेषु वक्षतः ॥

वेदोत्पत्तिः ( १ ) ऋग्वेदका समय ॥ ऋग्वेदको
योरुपके विद्वान् ४००० वर्षसे अधिक समयका लिखाहुवा
कहते हैं परन्तु निश्चय करके कोई प्रमाण ऐसा समय नियत
करनेका नहीं देते । अनुमानही, एक दो मंत्रोंके पाठसे कर
लेते हैं । प्रोफेसर जैकोवी एक वौनके जर्म्मनी निवासीने
लिखा है कि ईस्वी सन्से ४००० पहिले वह ऋचा लिखीगई
थी जिसमें ऋतुका कुछ वर्णन है । और उसने ज्योतिषशास्त्रसे
कुछ हिसाब किया है परन्तु एक ऋचाके अर्थसे ऐसा कथन
करना प्रामाणिक नहीं है और अर्थ भी शुद्ध करना बहुत
कठिन है । इतना तो सब मानते हैं कि ऋग्वेदसे पुराना कोई
पुस्तक सारी पृथिवीपर नहीं है । इसकी बहुतसी, ऋचा पार-
सियोंके ग्रंथ "आवस्ता" नामकसे सम्पूर्ण मिलती हैं । पाठमें

शब्दोंके उच्चारणका थोड़ासा भेद उसकी बोली जाननेवाले लिखते हैं। "जंडावस्ता" पारसियोंके धर्म्मका पुस्तक है। और वह अपनी पुस्तकके अनुसार अग्निको स्थापन करके हवनीय पदार्थोंसे उसका सेवन किया करते हैं। और सूर्य्यकी उपासना अपने मन्त्रोंद्वारा करते हैं। इससे आजकलके विद्वान् निश्चय करते हैं कि आर्य्यलोग पारसियोंसे इतना सम्बन्ध रखते थे कि उनके धर्म्मके पुस्तक एकही प्रकारके थे उनकी उपासनाकी मर्य्यादा भी एकही प्रकारकी थी इससे यह भी अनुमान किया गया है कि आर्य्यावर्तके ऋषि एक समयमें फारस देशमें या उसके आसपासमें रहते थे। और उनका कुछ आपसमें विरोध हुआ तो कछुक पुरुष पूर्वको चले आये कछुक वहांही रहे ॥

हिन्दू मुसल्मान और ईसाई यह तीन जातियां बहुधा हिन्दुस्तानमें वसती हैं ये जातियां महाभारतके पीछे हिन्दुओं मेंसे उत्पन्न हुई हैं और कालयवन आदि देशनिवासके हेतु न्यारे ठहरे हैं और देशके सुभीते और रीतिके अनुसार खान पान और पहरावेमें भेद होगया पहले समयमें इतना भेद नहीं था जो कि अब है। परन्तु अब तीनों जातियोंमें एक दूसरे की रीति व्यवहार और बर्तावमें बड़ा भेद होगया है यहां तक कि ईसाइयोंमें जो भेद रोमन कैथलिक और प्राटसृण्ट हैं आपसमें बड़ा अन्तर है ॥ सबको एक संमत करना चाहिये

अथर्ववेदीयोपनिषदोंके नाम निम्नलिखित हैं—

१ मुण्डकोपनिषत्
२ प्रश्नोप०
३ ब्रह्मविद्योप०
४ क्षुरकोप०
५ चूटिकोप०
६ शिरोप०
७ शिखोप०
८ गर्भोप०
९ महोप०
१० प्राणाग्निहोत्रोप०
११ मांडूक्योप०
१२ }
१३ } चारप्रकरण-वाली अद्वै-तोपनिषत्
१४ }
१५ }
१६ नीलरुद्रोप०
१७ नादबिन्दूप०
१८ ब्रह्मबिन्दूप०
१९ अमृतबिन्दूप०
२० ध्यानबिन्दूप०
२१ तेजोबिन्दूप०
२२ योगशिखोप०
२३ योगतत्त्वोप०
२४ संन्यासोप०
२५ आरुणीयोप०
२६ कण्ठश्रुत्योप०
२७ पिंडोप०
२८ आत्मोप०
२९ माहोप०
३० महोप० २
३१ महोप० ३
३२ महोप० ४
३३ महोप० ५
३४ नृसिंहोत्तरतापनीयोप०
३५ पूर्ववल्युप०
३६ उत्तरवल्युप०
३७ केनेषितोप०
३८ नारायणोप०

३९ बृहन्नारा० १
४० बृहन्नारा० २
४१ हंसोप०
४२ सर्वोपसारोप०
४३ परमहंसोप०
४४ आनन्दवल्युप०
४५ भृगुवल्युप०
४६ गारुडोप०
४७ कालाग्निरुद्रोप०
४८ रामपूर्वतापनीयोप०
४९ रामोत्तरता०
५० कैवल्योप०
५१ जाबाल्योप०
५२ आश्रमोप०

शाखाभेदसे अथर्व वेदकी ५२ उपनिषदोंके नाम इस प्रकारसे आये हैं, मांडूक्य और जाबालोपनिषद् शाखाओंके नामसेही प्रसिद्ध है, मुंडक और प्रश्नोपनिषद् पिप्पलादकी शाखाकी है मांडूक्योपनिषद् यद्यपि ऋग्वेदकी एक शाखाके नामसे प्रसिद्ध है परन्तु वह अथर्व वेदकी उपनिषदोंमें गिना जाता है—इसीपर गौड़पादाचार्य्यजीकी कारिका भी है जो वेदान्तसारके कर्त्ताने अपने ग्रन्थमें दिखाई है (गौड़पादाचार्य्य गोविन्दस्वामीके गुरु थे। गोविन्द शङ्कराचार्य्यजीके गुरु थे) शेष उपनिषदोंकी शाखाका पता नहीं चलता-अथर्ववेदकी उपनिषदोंमें अल्लोपनिषद् भी गिनी जाती है इस समयमें सत्यका निश्चय करना कि कौनसी २ उपनिषदें तो आर्ष हैं और कौनसी २ आधुनिक कल्पित हैं विद्वानोंको उचित है कि प्रामाणिक ग्रन्थोंका धर्म्मानुसार निर्णय करें, स्वामी शङ्कराचार्य्यजीका भाष्य ईशादि १० उपनिषदोंपर है इसपर

बहुत टीकायें होचुकी हैं, आनन्दगिरी टीका बहुत सुन्दर है—स्वामी विद्यारण्यजीने १०८ पर व्याख्या की है उपनिषदोंकी संस्कृत भाषा तो कठिन नहीं है परन्तु विषय बडा सूक्ष्म है इससे भाष्यटीकाओंको देखना उचित है भाषामें इनका अनुवाद है जो पण्डित पीताम्बरजीने किया है अंग्रेजीमें भी १० उपनिषदोंका अनुवाद भाष्यसहित होगया है—परन्तु शब्दोंके ठीक अभिप्रायका यूरुपदेशीय लोगोंको पूरा शुद्ध ज्ञान नहीं होसका परं च उनकी तीव्र बुद्धि और उद्यम है बड़े बड़े विद्वानोंको एकत्र करके ऐसे गुह्य ग्रन्थोंके जाननेका भी उद्योग किया है ॥

ॐ

## उपनिषदोंका विषय और आशय।

उपनिषदोंहीसे पूर्वाचार्य्योंने सम्पूर्ण ग्रन्थ रचना की है उपनिषदोंमें ऐसा जगदुत्पत्तिका प्रकार आया है जो आजकलके विद्वानोंने नवीन जानकर यह समझा है कि उपनिषदें आधुनिक विद्वानोंने रचीहैं सो ठीक नहीं क्योंकि इस भारतवर्षमें यावत् मनुष्यमात्र जानते हैं कि लय चिन्तन योगी लोग किया करते हैं सो द्विजातिमात्रको भी अनुसन्धान करना आवश्यक है। सो अनुसन्धान इस प्रकारसे निम्नलिखित है कि "ब्रह्म से आकाश, आकाशसे वायु, वायुसे अग्नि, अग्निसे जल, जलसे पृथिवी, पृथिवीसे औषधि और औषधिसे

अन्य जीवादिक" क्रमसे हुए हैं । और प्रलयकालमें इसीक्रमसे उलटे लय होते होते ब्रह्ममें सब पदार्थ लीन हो जावेंगे । ऐसे ऐसे विचारोंसे उपनिषदें भरी हुई हैं ॥ प्रत्येक उपनिषद्का प्रसंग ऐसे विचारोंको दिखानेके अर्थ संक्षेपसे लिखना आवश्यक है । वेदान्तदर्शनम् । 'उत्तर मीमांसा' वेदान्तपर व्यासजीके सूत्र जिनको शारीरक वा ब्रह्मसूत्र भी कहते हैं, अद्वैत मतको सिद्ध करते हैं जो उपनिषदोंका अथवा वेदका मत है बादरायणजीके सूत्रोंपर "शंकरस्वामी" जीका भाष्य अत्युत्तम है । वेदान्तपर बडे बडे ग्रन्थ संस्कृत और हिन्दीभाषामें लिखे गये हैं । 'सदानन्द' योगीन्द्रका 'वेदान्तसार' श्रीशंकरस्वामीजीके मतको अच्छे प्रकारसे प्रकट करता है । उपनिषदोंके वेदके अन्तमें आनेसे मुख्य करके वेदान्तका आदि ग्रन्थ कहाजाता है । पूर्वमीमांसादर्शनम् ॥ मीमांसा जिसको वेदान्तकी अपेक्षासे जो उत्तरमीमांसा है पूर्वमीमांसा—कहतेहैं जैमिन्युपक्रम है । मीमांसाके सूत्र 'जैमिनि' कृतपर "शबरस्वामी"का भाष्यहै । और उसपर 'कौमारिलभट्ट' का 'तन्त्रवार्तिक' और 'श्लोकवार्तिक' है ॥ 'माधवाचार्य' की 'जैमिनीय' 'न्यायमालाविस्तार' भी एक मीमांसासूत्रोंपर उत्तम टीका है परन्तु अंग्रेजीका अनुवाद बडा सुन्दर 'मरहटी' भाषाके सहित जो शबरके कुछ अनुकूल ही है छपचुका है । मीमांसामें यज्ञोंकी कर्मकाण्डकी वेदानुकूल व्याख्या युक्तिपू-

र्वक ऐसी सुन्दर की हुई है कि, जो आजकल शंका होती है उनके उत्तर उसमें मिल जाते हैं।

अब प्रत्येक शास्त्रोंके भिन्न भिन्न विषयोंका भेद संक्षेपसे लिखा जाता है, प्रत्येक विषयका विस्तारपूर्वक वर्णन करनेसे ग्रन्थ बहुत बढ जावेगा परंच सबका मत एक स्थलमें लिखते इ, इसमें कुछ संक्षेपसे विद्वान् इसको शांतिके साथ विचारा करें तो यह सबको लाभकारक है इसके साथ ही चित्रको बनाकर नीचे लिखते हैं--षट्शास्त्रोंका प्रसंग संक्षेपसे लिखकर फिर भी ऐसे कई पुस्तक पायेगये थे जो किसी एक शास्त्रसे संबन्ध नहीं रखते थे परंच सबहीका प्रसंग संक्षेपसे उनमें आजाता है । इस करके उनका वर्णन यहाँ किया जाता है सबसे प्रसिद्ध ग्रन्थ स्वामी मधुसूदन सरस्वतीजीका प्रस्थान भेद है उसमें सबही शास्त्रोंका बीजमात्रसे वर्णन है । दूसरा ऐसाही माधवाचार्यका ( सर्वदर्शनसंग्रह ) है जिसमें सबमतोंके जो इस देशमें चार्वाकसे लेकर वेदान्त पर्यन्त हैं निःपक्ष होकर वर्णन किया है इन ग्रन्थोंसे यह ज्ञान होता है कि इन सब शास्त्रोंमें परस्पर क्या भेद था किस किस विषयपर एक दूसरेसे सहायक थे । ( विज्ञानभिक्षुने ) अपने सांख्यसूत्रोंके भाष्यके आदिमें लिखा है किस प्रकारसे सहायक थे इस विषयपर उनकाही ग्रन्थ देखने योग्य है ।

## षड् शास्त्रोंकी एकता ।

| अङ्क. | विषय. | पूर्व–मीमांसा. | उत्तर–मीमांसा. | न्याय. | वैशेषिक. | सांख्य. | योग. |
|---|---|---|---|---|---|---|---|
| १ | जगत. | स्वरूपसे अनादि और अनन्त प्रवाह रूप संयोग वियोगवान्. | नामरूपक्रियात्मक मायाका परिणाम, चेतनका विवर्त. | परमाणु आरम्भित संयोग–वियोग–जन्य आकृति विशेष. | परमाणु आरम्भित संयो ग–वियोग-जन्य आकृति विशेष. | प्रकृति परिणाम त्रयोविंशति २३ तत्त्वात्मक. | प्रकृति परिणाम त्रयोविंशति २३ तत्त्वात्मक. |
| २ | जगत् कारण. | जीव अदृष्ट और परमाणु. | अभिन्ननिमित्तोपादान ईश्वर. | परमाणु ईश्वरादि नव ९. | परमाणु ईश्वरादि नव ९. | त्रिगुणात्मक–प्रकृति. | कर्मानुसार प्रकृति तन्नियामक ईश्वर. |
| ३ | ईश्वर. | ० | मायाविशिष्ट चेतन. | नित्य इच्छा ज्ञानादि–गुणवान् विभु कर्ता विशेष. | न्यायोक्त. | ० | क्लेशकर्मविपाक–आशय असंवद्ध पुरुषविशेष. |
| ४ | जीव. | जडचेतनात्मक विभु नाना कर्ता भोक्ता. | अविद्याविशिष्ट चैतन्य. | ज्ञानादि–चतुर्दश गुणवान् कर्ता भोक्ता जड विभुनाना. | ” | असंग चेतन विभु नाना भोक्ता. | असंग चेतन विभु नाना कर्ता भोक्ता. |
| ५ | वन्ध. | नरकादि दुःख–संवन्ध. | अविद्या तत्कार्य्यचिज्जडग्रंथि. | २१ एकविंशति दुःख. | ” | आध्यात्मिक आदि त्रिविध दुःख. | प्रकृतिपुरुषसंयोगजन्य अविद्यादि पंच क्लेशाः अविद्यादि क्लेश जन्य शुभाशुभ कर्मद्वारा धर्माधर्म. |

## षट्शास्त्रसारसंग्रह ।

| अङ्क. | विषय. | पूर्व–मीमांसा. | उत्तर–मीमांसा. | न्याय. | वैशेषिक. | सांख्य. | योग. |
|---|---|---|---|---|---|---|---|
| १ | बन्धहेतु. | निषिद्ध कर्म्म. | अविद्या. | अज्ञान. | परमाणु ईश्वरादि नव ९. | अविवेक. | अविद्यादि पञ्च क्लेश. |
| २ | मोक्ष. | स्वर्गप्राप्ति. | अविद्यातत्कार्य्य-निवृत्तिपूर्वक पर–मानन्द ब्रह्मप्राप्ति. | २१ एक विंशति दुःख ध्वंस. | न्यायवत्. | त्रिविध-दुःखध्वंस. | प्रकृतिपुरुषसंयोगाभाव–पूर्वक अविद्यादि पञ्चक्ले-शनिवृत्ति. |
| ३ | मोक्षसाधन. | वेदविहितकर्म. | ब्रह्मात्मैक्यज्ञान. | इतर भिन्न–आत्म ज्ञान. | ,, | प्रकृतिपुरुष विवेक. | प्रकृतिपुरुषविवेकख्याति निर्विकल्प समाधिजन्य प्रकृति पुरुषाख्याति. |
| ४ | अधिकारी. | कर्मफलासक्त. | मलविक्षेप दोषर-हित– चतुष्टयसा-धनसंपन्न. | दुःखजिहासु तर्क कुशल. | ,, | संदिग्ध विरक्त. | विक्षिप्तचित्तवान् चित्त-विक्षेपनिवृत्तिकामश्च. |

## ॥ षट्शास्त्रसारसंग्रह ॥

| अंक | विषय | पूर्व मीमांसा | उत्तर मीमांसा | न्याय | वैशेषिक | सांख्य | योग | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | प्रधान काण्ड | कर्मकाण्ड | ज्ञान काण्ड | ,, | ज्ञान काण्ड | ,, | उपासनाकाण्ड | | |
| २ | आत्म परिमाण | विभु नाना | विभु एक | विभु नाना | न्यायवत् | विभु नाना | सांख्यवत् | | |
| ३ | वाद | आरम्भवाद | विवर्तवाद | आरम्भवाद | ,, | परिणामवाद | ,, | | |
| ४ | ख्याति | अख्याति | अनिर्वचनीय | अन्यथाख्याति | ,, | अख्याति | ,, | पौराणिक | तान्त्रिक |
| ५ | प्रमाण | १ प्रत्यक्ष २ अनुमान ३ उपमान ४ शब्द ५ अर्थापत्ति ६ अभाव | पूर्वमीमांसावत् | १ प्रत्यक्ष २ अनुमान ३ उपमान ४ शब्द | १ प्रत्यक्ष २ अनुमान ३ शब्द | १ प्रत्यक्ष २ अनुमान ३ शब्द | ,, | छेके सिवाय सातवां संभव और आठवां ऐतिह्य प्रमाण मानते हैं | चेष्टाको भी प्रमाण मानते हैं |
| ६ | सत्ता | जीवज परमार्थ सत्ता | परमार्थरूप आत्मसत्ता व्यावहारिक और प्रातिभासिक जगत्स, | जीव जगत् परमार्थसत्ता | न्यायवत् | जीव जगत् परमार्थ सत्ता | ,, | | |
| ७ | उपयोग | चित्तशुद्धि पूर्वक मोक्ष | तत्त्वज्ञानपूर्वक मोक्ष | मननद्वारा | ,, | त्वं, पदार्थ शोधनद्वारा | चितैकाग्र्य द्वारा | | |
| ८ | | जैमिनि | वेदव्यास | गौतम | कणाद | कपिल | पतञ्जलि | | |

## ॐ पुराणोपपुराणविषयसंक्षेपकथनम् ।

अठारह पुराण और अठारह उपपुराण प्रसिद्ध हैं, पुराण शब्द उन ग्रन्थोंके वास्ते योजन कियाजाता है जिनके लक्षण एक श्लोकमें प्रसिद्ध है–

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ १ ॥

## स्मृतिशास्त्राणां संक्षेपव्याख्यानम् ।

यद्यपि स्मृतिग्रन्थ कल्पान्तरगत है तथापि धर्मशास्त्रके नामसे विख्यात होनेसे उनका विचार भिन्नही करना योग्य है जैसा कि निम्न लिखित श्लोकसे प्रतीत होताहै--

अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ १ ॥

## स्मृति ग्रंथाः ।

वेदोंको श्रुतिनामसे और धर्मशास्त्रोंके ग्रन्थोंको स्मृति नामसे शास्त्रकार पुकारते हैं, वेदोंका वर्णन ऊपर हुआहै अब स्मृति ग्रन्थोंका संक्षेपसे वृत्तान्त लिखाजाता है। स्मृतिशब्द का अर्थ यह है कि जो ऋषियोंने स्मरण करके लिखे हैं उनको स्मृति कहते हैं। कल्पादिक सूत्र और धर्मशास्त्र और "महाभारत" जैसे इतिहास इसी शब्दसे सूचित होते हैं।

